सखी हलेति च प्रेष्या हञ्जे [1]वेश्याज्जुकेति च ।
कुहकेत्यनुगतैः पूज्याम्बा जरती जनैः ॥ ३० ॥

विदूषकेण भवती राज्ञी [2]चेति च शब्द्यते ।
हण्डे नीचापुरस्कारो लालिनातु यवीयसी ॥ ३१ ॥

भगिनीपतिरावुत्तो राजा भट्टारको जनैः ।
युवराजः कुमारः स्याद्भर्तुदारक इत्यपि ॥ ३२ ॥

राजपुत्री तु तद्वत्स्यादार्यपुत्रः पतिः स्त्रिया ।
प्रियेति भर्त्रा राज्ञी स्याच्छ्यालो राष्ट्रिय उच्यते ॥ ३३ ॥

देवी कृताभिषेकायामितरासु तु भट्टिनी ।
अत्तिका भगिनी ज्येष्ठा बाला वासूरितीर्यते ॥ ३४ ॥

सद्वृत्तशालि सरसं नाट्यं नियतभाषितम् ।
त्वच्चरित्रमिवाभाति महितं मन्मभूपते ॥ ३५ ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे वृत्तिनिरूपणं नाम
अष्टमः परिच्छेदः

— —

1. वेश्याज्जुकेति च. 2. राज्ञिचेति ; राजी चेति.

## नवमः परिच्छेदः

नाटकं सप्रकरणं भाणःप्रहसनं डिमः ।
व्यायोगसमवाकारौ वीथ्यङ्केहामृगा दश ॥ १ ॥

प्रधानरूपकाण्याहुर्दशैतानि विपश्चितः ।
नाटिका सट्टकं त्रोटी प्रेंखणं[1] गोष्टिभाणिके[2] ॥ २ ॥

संलापकश्च प्रस्थानं [3]काव्यहल्लीशरासकम् ।
श्रीगदितं च लासिका [4]दुर्मल्लीनाट्यरासकम् ॥ ३ ॥

उल्लाप्यमुपरूपाणि भवन्त्येतानि षोडश ।
[5]प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् ॥ ४ ॥

संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ।
रङ्गः सदस्य स्थानोर्वी नेपथ्यो नटवर्गभूः ॥ ५ ॥

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः प्रकीर्तितः ॥ ६ ॥

प्रत्याहारोऽ[6]वतरणमारम्भाश्रावणे[7] अपि ।
[8]वक्रपाणिः परिघट्टनायासंघोटना[9] तथा ॥ ७ ॥

मार्गापसारितं शुष्कापकृष्टोत्थापने तथा ।
परिवर्तनकं नान्दी तथाचैव प्ररोचना[10] ॥ ८ ॥

[11]त्रिगतं चासारितं तथा गीति[12] विधि ध्रुवाः ।
[13]त्रिसामकमधो[14]रङ्गद्वारं स्याद्वर्धमानकम् ॥ ९ ॥

चारिर्महाचारिरिति पूर्वरङ्गाङ्गसङ्गतिः ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥ १० ॥

---

1. प्रेक्षणं. 2. भाषिते. 3. काव्यभट्टीपरासकम ; काव्यफल्लिी सराषकम्; दुर्गल्लिीनाट्यरासकम्. 4. दुर्मती 5. प्रकृतित्वात्तथान्येषां. 6. पहरण. 7 श्रयण; श्रवणे. 8. चक्रपाणिः. 9. सङ्घोटना ; संघोटका ; संखोटका. 10. प्रलोभना. 11. त्रिङन्तं. 12. नीति. 13. त्रिसाधुक. 14. मतोरङ ; मधीरंग.

तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।
आशीर्वचनसंयुक्ता यस्मान्नित्यं भवेदिह ॥ ११ ॥

देवद्विजनृपादीनां तस्मान्नान्दीति शब्दिता ।
नान्दी गुणनिका वाद्यमानन्दादित्रयोत्थितम्[1] ॥ १२ ॥

[2]नन्दीशः पूज्यते पुष्पैः [3]तस्मान्नान्दीति सूच्यते ।
या काचित् पठ्यते सूक्तिर्या कांचिद्देवतां प्रति ॥ १३ ॥

सूत्रधारेण नाट्यादौ सा नान्दी नन्दिनो मुदे ।
[4]मङ्गल्यशंखचक्राब्जकोककैरवशंसिनी[5] ॥ १४ ॥

नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृता ।
पूर्वरङ्गं विधायेत्थं सूत्रधारे विनिर्गते ॥ १५ ॥

प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ।
दिव्यमर्त्ये[6] स तद्रूपो मिश्रमन्यतरस्तयोः ॥ १६ ॥

सूचयेद्वस्तु बीजं[7]वा मुखं पात्रं क्रमाद्यथा ।

" रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ[8] परां संपदं
प्रोद्वृत्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥ "

" यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ "

" [9]आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः[10] ।

---

1. त्रयोद्गतम्; त्रयोद्भतम्. 2. वन्दीशः. 3. तेन. 4. मङ्गल्या. 5. शंसिनाम्. 6. मर्त्यौ; दिव्यमर्त्यैं स तद्रूपा मिश्रामन्य तमस्तयोः. 7. बीजाद्यैर्मुखं पात्रं; बीजं वा मुखं पात्र; 8. प्राप्तौ. 9. आसारित. 10. विरुद्धकान्तिः; विरुद्धकान्तः; विशुद्धकान्तिः.

उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव [1]संभृतबन्धुजीवः ॥ ”

“ तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ”

रङ्गं[2] प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ॥ १७ ॥

ऋतुं कंचिदुपादाय[3] भारतीं वृत्तिमाश्रयेत् ।
प्ररोचना प्रशंसात[4]स्तून्मुखीकरणं यथा ॥ १८ ॥

“ श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं[5] किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ”

सूत्रधारो नटीं ब्रूते [6]मार्षं वाऽथ विदूषकम् ।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥ १९ ॥

प्रस्तावनेति वा [7]तत्र कथोद्घातः प्रवृत्तकम् ।
[8]प्रयोगातिशयश्चाथ [9]वीथ्यङ्गानि त्रयोदश ॥ २० ॥

स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातो[10] द्विधा यथा ॥ २१ ॥

“ द्वीपदन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ”

---

1. संहृत. 2. अनिष्ठुरैश्च मधुरैः श्लोकैर्वाक्यार्थसूचकैः. ।· 3. दुपास्थाय. 4. वस्तून्मुखी. 5. फलं. 6. मारिषं वा. 7. तस्य कथाद्धेद. प्रवर्तकम्. 8. प्रयोणातिशयश्चेति त्रीण्यङ्गान्यमखस्य तु. ; प्रयोगातिशयश्चाथ वाम्यङ्गानि त्रयोदश. ॥ 9. वाम्यंगानि. 10. त्रिविधा.

" लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वःस्था [1]भवन्तु मयि जीवति धार्तराष्ट्राः ॥ "

कालसाम्यात् प्रवेशो यः प्रवृत्तकमिदं यथा ।

" प्रौढपयोधरधारा प्रावृण्मलिनाम्बरा प्रबाष्पधरा ।
मानसगराजहंसा मानवतीवाद्य भाति मदनार्ता ॥ "

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ॥ २२ ॥

पात्रप्रवेशो[2] यत्रैषः प्रयोगातिशयो यथा ।

" सौरभेण सहकारपादपः
[3]पश्यतो हरति षट्पदावलीम् ।
रामणीयकगुणेन[4] रागिणीं
कौमुदीदृशमिवैष कैरवः ॥ "

" वर्णयितुमस्य महिमा वसन्तसमयस्य शक्यते केन ।
यदयं विप्रो वृद्धोऽप्युज्झति दामोदरो निजां प्रकृतिम् ॥ "

वीथ्यङ्गान्यामुखाङ्गत्वादुच्यन्तेऽत्रैव तानि तु ॥ २३ ॥

उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ।
वाक्केल्यधिबले गण्डमवस्यन्दितमालिके ॥ २४ ॥

असत्प्रलापव्याहारमृदवानि त्रयोदश ।
वीथीप्रसङ्गे वीथ्यङ्गलक्षणं तत्र वक्ष्यते ॥ २५ ॥

आदौ प्रसङ्गाद्वीथ्यङ्गलक्षणं तत्र कथ्यते ।
एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् ॥ २६ ॥

1. भवन्ति, 2. प्रयोगो, 3. पद्ममाहरतिः. 4. मनेन.

प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रबन्धयेत् ।
पूर्वरङ्गः सभापूजा कवेर्गोत्राद्यनुकीर्तनम्[1] ॥ २७ ॥

नाटकादेस्तथा संज्ञा सूत्रधारोप्यथामुखम् ।
अर्थोपक्षेपकाः पञ्च तथाङ्कविधिरेव च ॥ २८ ॥

अर्थप्रकृतयः पञ्च चतस्रो वृत्तयोऽपि च ।
[2]नाट्योक्तिश्च [3]समावेशः तथा भाषाविभाषयोः ॥ २९ ॥

प्रायशः सर्वनाट्येषु कीर्त्यन्ते सङ्गता इमे ।
संज्ञा तु [4]नाटकादीनां नायकेनेतरेण वा ॥ ३० ॥

[5]नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ।
नाटिका सट्टकादीनां [6]नायिकाभिर्विशेषणम् ॥ ३१ ॥

[7]अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् ।
कीर्तिकामो महोत्साहस्त्रय्यास्त्राता महीपतिः ॥ ३२ ॥

प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः ।
तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम् ॥ ३३ ॥

यत्तत्रानुचितं[8] किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ३४ ॥

यथा वालिवधस्त्यक्तश्छद्मनोदात्तराघवे ।
कल्पितो वीरचरिते वधस्तस्यैव चान्यथा ॥ ३५ ॥

आद्यन्तमेवं[9] निश्चित्य पञ्चधा तद्विभज्य च ।
खण्डशः सन्धिसंज्ञांस्तान्भागानपि च खण्डयेत् ॥ ३६ ॥

द्वित्रिद्वित्रिचतुर्युक्तदशसंख्यान्यनुक्रमात् ।
चतुष्षष्टिश्च तानि स्युरङ्गानि त्विह सन्धिषु ॥ ३७ ॥

---

1. वर्णनम्. 2. नाट्योक्तश्च. 3. समादेशः. 4. नायकादीनां. 5. नायकानायिका. 6. नायिकादिवि. 7. अधिगम्य. 8. नुगतं. 9. मेव.

आदौ विष्कम्भकं कुर्यादङ्कं[1] वा कार्ययुक्तितः ।
अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ॥ ३८ ॥

यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तथा ।
यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ३९ ॥

आदावेव तदा कुर्यादामुखाक्षेपसंश्रयम्[2] ।
प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः[3] ॥ ४० ॥

अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ।
अनुभावविभावाभ्यां स्थायिना[4] व्यभिचारिभिः[5] ॥ ४१ ॥

गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्[6] ।
न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ॥ ४२ ॥

रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ।
एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा ॥ ४३ ॥

अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ।
दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ॥ ४४ ॥

संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥ ४५ ॥

नाधिकारिवधं क्वापि त्याज्यमावश्यकं न[7] च ।
एकाहचरितैकार्थं कुर्यान्चासन्ननायकम् ॥ ४६ ॥

पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ।
एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः ॥ ४७ ॥

---

1. दङ्ग. 2. दामुखापेक्षसंश्रयम्; संश्रयः. 3. समन्वितः. 4. स्थायिनो. 5. व्यभिचारिणः. 6. तोषणम्. 7. क्वचित्.

पञ्चाङ्कं च षडङ्कं च सप्ताङ्कं च तथापरम् ।
अष्टाङ्कं च नवाङ्कं च दशाङ्कं नाटकं विदुः ॥ ४८ ॥

मारीचवञ्चनं नाम पञ्चाङ्कं परिकीर्तितम् ।
वेणीसंहारसंज्ञं तु षडङ्कं नाटकं मतम् ॥ ४९ ॥

शाकुन्तलं तु सप्ताङ्कमष्टाङ्कं नलविक्रमम्[1] ।
देवीपरिणयाख्यानं नवाङ्कं परिकीर्तितम् ॥ ५० ॥

बालरामायणं नाम दशाङ्कं नाटकं स्मृतम् ।

अथ प्रकरणम्—

अथ प्रकरणे वृत्तमुत्पाद्यं लोकसंश्रयम् ॥ ५१ ॥

अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ।
धीरप्रशान्तं सापायं धर्मकामार्थतत्परम् ॥ ५२ ॥

[2]नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा ।
क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित् ॥ ५३ ॥

आभिः प्रकरणं त्रेधा शुद्धं स्यात्कुलजान्वितम् ।
सङ्कीर्णं वेश्यया युक्तं मिश्रं तद्द्वयसङ्गतम् ॥ ५४ ॥

शेषं नाटकवत् [3]सन्धिप्रवेशकरसादिकम् ।

अथ भाणः—

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ॥ ५५ ॥

यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ।
सम्बोधनोक्तिप्रत्युक्तीः कुर्यादाकाशभाषितैः ॥ ५६ ॥

सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ।
भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम् ॥ ५७ ॥

---

1. नायिकां तद्द्विधां नेतुः कुर्यात् स्त्री गणिकां तथा. । 2. नलवीजयः. 3. सर्व.

मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ।

लास्याङ्गानि—

[1]गेयपदं स्थितपाठ्यमासीनं पुष्पगन्धिका[2] ॥ ५८ ॥

[3]प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ।
उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव च ॥ ५९ ॥

लास्ये दशविधं ह्येतदङ्गनिर्देशकल्पनम् ।
सुखासीना श्रुतिसुखं यत्र गायन्ति गायकाः ॥ ६० ॥

तताद्विवाद्यमिश्रं तच्छुष्कं गेयपदं यथा ।

" सुखासीनाः सन्तः सुरभिकुसुमामोदसुभगे
[4]तले सान्द्रच्छाये तरुणसहकारस्य शिशिरे ।
कलैर्वीणावाद्यैः[5] सममृदुलसन्दिग्धवचसो[6]
[7]रसावेशोल्लासान्मदनमिह[8] गायन्ति मधुरम् ॥ "

पठेद्यत्रासनासीना[9] प्राकृतं विरहातुरा ।
अङ्गनानङ्गतप्ताङ्गी स्थितपाठ्यं मतं यथा ॥ ६१ ॥

" रति ए हित्तहि अओ महुलरमोत्तूण पथमिणिं ।
अण्णत्तो गच्छसि गच्छ सुणो सापेच्छादिअ अण्णम् ॥ "

णिमिल अंबुलहच्छि ।

शोकचिन्तापरवशं वाद्याभिनयवर्जितम् ।
आस्यते यत्र कामिन्या तदासीनं मतं यथा ॥ ६२ ॥

बाले मालतिके !

" म्लानं ते वदनं मनो[10]विगलितं मन्दो विलासक्रमः
चिन्ताशोकवशं चिरोज्झितसुखं चिरं वपुर्धूसरम् ।

---

1. गेयं पदं स्थितं पाठ्यं. 2. गन्धिका. 3. प्रमेदक 4. तते 5. काणै. 6. वचसा, 7. समावेशो. 8. मधुरमिह गायन्ति मदनम् । 9. यत्तु समासीना. 10. मदो विकल्पितो

निःशब्दाभिनयं निवेश्य विजने त्वं चेष्टसे नो यथा[1]
प्रालेयप्रकरेण पाडितपरिक्लिष्टाम्बुजा पद्मिनी ॥ "

नर्तक्याः पुरुषस्येव प्रगल्भं चेष्टितं यथा ।
नैकभेदं च सङ्गीतं स्याद्यथा पुष्पगन्धिका ॥ ६३ ॥

" ग्रीवाविभूषणविषस्तदुकूलकोण[2]-
संछन्नपीवरपयोधरभारनम्रा ।
मैरेयमत्तमहिलाकरदत्तताल-
मातन्वती समदनर्तनमाविरास्ते ॥ "

सखि शारदिके ! पुंवत्प्रगल्भा विविधगानमुखरविलासिनीमध्यगता निस्त्रपं नृत्यसि ।

स हि प्रच्छेदको यत्र ज्योत्स्नासम्पातविक्लवाः ।
कामिन्यो यान्त्यपव्रीडाः सागसोऽपि प्रिया यथा ॥ ६४ ॥

" प्रचलितनिजलज्जाः प्राङ्मुखं वीक्षमाणा-
स्तिमिरविगमभीतास्तीर्णमार्गाश्च तूर्णम्[3] ।
वलयचलनलोला वञ्चितात्मीयलोकाः
सततमभिसरेयुः सागसोऽप्यात्मनाथान्[4] ॥ "

पुंभावप्रचुरं नाट्यं समवृत्तपरिष्कृतम् ।
मृदुश्लक्ष्णपदं यत्र तत्त्रिगूढं स्मृतं यथा ॥ ६५ ॥

अस्याः खलु—

" अभिनयशस्तौ हस्तौ पादौ परिभूतकिसलयौ सलयौ ।
अङ्गं रञ्जितरङ्गं नृत्तं पुंभावशालि समवृत्तम् ॥ "

न नाट्ये लक्ष्यते पाठ्यं पात्रं[5] सङ्केतवञ्चनम् ।
जायते सैन्धवी भाषा यत्र तत्सैन्धवं यथा ॥ ६६ ॥

---

1. मदा. 2. निषस्त्व. 3. तूर्णमुद्गीर्णमार्गाः. 4. पि स्वानाथान्. 5 पात्रे.

नाट्यमलक्षितपाठ्यं पात्रे सङ्केतवर्णितं[1] यत्र ।
सैन्धवभाषा चतुरैर्विहितं वैदेशिकैर्नटैर्वीथ्याम् ॥ ६७ ॥

रसभावाः परिक्लिष्टाश्चतुरस्रः परिश्रमः ।
मुखप्रतिमुखे चित्रे तद्द्विगूढं मतं यथा ॥ ६८ ॥

अत एव कल्पनीयाः खल्वस्याश्च रसभावाः ।
रसभावाः परिक्लिष्टाः प्रौढो विद्यापरिश्रमः ॥ ६९ ॥

चित्रे मुखप्रतिमुखे सलयः पादयोः क्रमः ।
विचित्राः श्लोकसन्दर्भा यत्र नानाविधो रसः ॥ ७० ॥

हेला भावाश्च ललिताश्चोत्तमोत्तमकं यथा ।

केयं पटाक्षेपेण प्रविशति ?

" अङ्कूरत्कुचमप्यनल्पविलसत्तत्सन्निवेशक्रमं
वक्षोऽस्या वलिरेखिकाभिरुदरं वामभ्रुवोपास्यते ।
अङ्गं रङ्गदृशामनङ्गनृपतेः कारागृहं श्रीयते
भावैश्चित्रपदार्थ[2]भावितरसान् श्लोकान् पठत्याननम् ॥ "

पदानि साधिक्षेपाणि चित्रं गीतार्थयोजनम् ।
यत्र कोपप्रसादाभ्यामुक्तप्रत्युक्तकं यथा ॥ ७१ ॥

अपि च—तस्याः पश्चान्निषण्णा काचित् कुपिता —

" गायति [3]गेयं साधिक्षेपपदं सहचरीमुखे स्खलिते ।
तस्यामियं प्रसन्ना चित्रं गीतार्थमभिनयत्यङ्गैः[4] ॥ "

अथ प्रहसनम्—

अथ प्रहसनं त्रेधा शुद्धवैकृतसङ्करैः ।
पाषण्डिविप्रप्रभृतिचेटचेटीविटाकुलम् ॥ ७२ ॥

---

1. वचनं. 2. पटार्थ. 3. गीतं. 4. त्युच्चैः.

चेष्टितं वेषभाषाभिः शुद्धं हास्यवचोन्वितम् ।
कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ॥ ७३ ॥

विकृतं, सङ्कराद्वीथ्या सङ्कीर्णं धूर्तसङ्कुलम् ।
रौद्रबीभत्सरहिता रसाः स्युर्हास्य एव वा ॥ ७४ ॥

भाणवत्सन्धिलास्याङ्गान्येकाङ्कं द्व्यङ्कमेव वा ।

अथ डिमः—

डिमे वस्तु प्रसिद्धं स्याद्वृत्तयः कैशिकीं विना ॥ ७५ ॥

नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ७६ ॥

रसैरहास्यशृङ्गारशान्तैः षड्भिः समन्वितः ।
मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादि[1]चेष्टितैः ॥ ७७ ॥

चन्द्रसूर्योपरागैश्च न्याय्ये रौद्ररसेऽङ्गिनि ।
चतुरङ्कश्चतुः सन्धिर्निर्विमर्शो डिमः स्मृतः ॥ ७८ ॥

इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥ ७९ ॥

अथ व्यायोगः—

ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः ॥ ८० ॥

अस्त्रीनिमित्तसङ्ग्रामो जामदग्न्यजये[2] यथा ।
एकाहचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥ ८१ ॥

अथ समवकारः—

कार्यं समवकारेऽपि चामुखं नाटकादिवत् ।
ख्यातं देवासुरं वस्तु निर्विमर्शास्तु सन्धयः ॥ ८२ ॥

---

1. भ्रान्त्या. 2. जयो.

वृत्तयो हीनकैशिक्यो नेतारो देवदानवाः ।
[1]द्वादशोदात्तविख्याताः फलं तेषां पृथक् पृथक् ॥ ८३ ॥

[2]अङ्गी वीरोऽङ्गानि चान्ये यद्वदम्भोधिमन्थने ।
अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ॥ ८४ ॥

द्विसन्धिरङ्कः प्रथमः कार्यो द्वादशनालिकः ।
[3]चतुर्द्विनालिकावन्त्यौ नालिका घटिकाद्वयम् ॥ ८५ ॥

वस्तुस्वाभावदैवारिकृताः[4] स्युः कपटास्त्रयः ।
धर्मार्थकामैः शृङ्गारो नात्र बिन्दुप्रवेशकौ ॥ ८६ ॥

व्रताद्युज्ज्वलताशौचं धर्मशृङ्गार उच्यते ।
मुक्तारत्नाद्यलङ्कारै रर्थशृङ्गार उच्यते ॥ ८७ ॥

सम्भोगविप्रलम्भादि कामशृङ्गार इत्ययम् ।
पुरोपरोधयुद्धे[5] च वाताग्न्यादिकविद्रवाः ॥ ८८ ॥

वीथ्यङ्गानि यथालाभं कुर्यात्प्रहसने यथा ।

अथ वीथी—

वीथी[6] तु कैशिकीवृत्त्या सन्ध्यङ्गाङ्कैश्च भाणवत् ॥ ८९ ॥

रसः सूच्यस्तु शृङ्गारः स्पृशेदपि रसान्तरम् ।
नायिकानायकौ कार्यौ शृङ्गारद्वयसंश्रयौ ॥ ९० ॥

युक्ता प्रस्तावनाख्यातैरङ्गैरुद्घात्यकादिभिः ।
उद्घात्यकावलगिते प्रपञ्चत्रिगते छलम् ॥ ९१ ॥

वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि त्रयोदश ॥ ९२ ॥

---

1. शोद्धत. 2. बहुवीररसाः सर्वे. (D.R.;) 3. चतुर्दिनालिका. 4. दैवादि.
5. युद्धेम. 6. विदितं.

गूढार्थपदपर्यायमाला प्रश्नोत्तरस्य वा ।
यत्रान्योन्यसमालापो द्वेधोद्धात्यं मतं यथा ॥ ९३ ॥

मानवती— अय्ये! कादम्बिणि! आ आदो तुहकालो

कादम्बिनी— वत्से! मानवती! अत एव खल्वहं विहरामि। किं त्वकालोऽप्ययं राजहंसः [1]प्रविष्ट इति [2]विचारयामि ॥

राजा— (समन्तादवलोक्य) (अनाकलितविहङ्गविहारः स्वगतम्)

वचनमिदमात्मविषयं वर्णितमनयावधार्यते युक्त्या ।
प्रमदानामनुरागः प्रायः प्राप्तेरपि प्रियं तनुते ॥ ९४ ॥

मानवती— अय्ये! रायहंसो कहिं दिट्ठो?

कादम्बिनी— वत्से! तव मानसे.

मानवती— अय्ये! मत्तासि.

" का श्लाघ्या गुणिनां क्षमा परिभवः कोयं स्वकीयैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
का मृत्यर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरच्छन्नस्थितैः पाण्डवैः ॥ "

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वा या स्याद्द्विधावलगितं यथा ॥ ९५ ॥

रामः— लक्ष्मण! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि, तदवतीर्य गच्छामि ।

" [3]कोऽयं सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षमाली[4] च [5]चामरीव विराजते ॥ "

इति भरतदर्शनकार्यसिद्धिः.

विदूषकः— (अपवार्य) वअस्स! मह कण्ठे, कासेण कंडूदि होदि, किं कादव्वम्?

1. प्रवीष. 2. चरामि. 3. कोऽपि. 4. नक्षवक्त्रौ, 5. [illegible]

रामः— (सानुनयं) वयस्य ! सकर्पूरं ताम्बूलं चर । तावता कण्ठकण्डूर्निवर्तते । ताम्बूलं चेदम् ।

असद्भूतमिथःस्तोत्रं प्रपञ्चो हास्यकृद्यथा ।

राजा—वयस्य ! त्वया वयमतिसंहिताः ।

विदूषकः— वअस्स ! तु ए वंशिख्खिदणे पुणो तुह एव्व कहं अधिसंधाणं कप्पेमि । किं दु घडेमि अण्णेण परस्स जायं मुणि णमो येमिवदं मुहुत्ते । मणस्सिणीणं विहडेमि माणं तुह प्पहावेण तणेमि सव्वम् ।

स्तुतिसाम्यादनेकार्थयोजनं लिगतं त्विह ।
नटादित्रितयालापः पूर्वरङ्गे मतं यथा ॥ ९६ ॥

नटी— अय्य ! तहा होदु ।

सूत्रधारः— (आकाशमवलोक्य)

“ विलोलविद्युल्लतिकावरत्रा-
विनिःसरद्वारिमदप्रवाहाः[1] ।
वनद्विपागर्जितबृंहिताढ्या-
श्चरन्ति खे चातकचञ्चरीकाः ॥ ”

[2]प्रियाभैरप्रियैर्वाक्यैर्विलोभश्छलनं यथा ।

राजा— (सोत्प्रासं)

“ यदमुष्मिन्नपि यतसे कार्ये साहाय्यमेवमाचरितुम् ।
समसुखदुःखः संप्रति सखा ममान्योऽस्ति कस्त्वया सदृशः ॥ ”

विनिवृत्त्यास्य वाक्केलिर्द्वित्रिः प्रत्युक्तितो यथा ॥ ९७ ॥

मानवती— अय्ये ! कादम्बिणि !

“ अणिसंपि मयरकेदू अणिवारिदवेर वट्टि उच्छाहो ।
तलतंपि तवेज्जमम्मं पिय भारो एक्केण दोण दुव्वज्झौ ॥ ”

---

1. बहुप्रवाहः. 2. प्रियार्थैः.

कादम्बिनी—

" मन्मथो ननु मात्सर्यात्तद्रूपविजितस्तव ।
तापं तनोति नामुष्य नान्यथा कथमागतः ॥ "

मानवती— अय्ये ! सो एव्व सव्वत्तदीयदि[1] ।

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं यथा ॥

भीमः—

" सकलरिपुजयाशा यत्र बद्धा सुतैस्तै-
स्तृणमिव परिभूतो यस्य गर्वेण लोकः । "

[3]इत्युपक्रमः– अये ! नाहं भवानिव विकत्थनाप्रगल्भः ।

किन्तु—

" द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षो[4]ऽस्थिवेणिकाबन्धभीषणम्[5] ॥ "

गण्डं प्रस्तुतधिक्कारि भिन्नं वेगोदितं यथा ॥ ९८ ॥

कादम्बिनी— वत्से ! समागत[6]: ।

मानवती— (सानन्दं) अय्ये कोऽसौ ?

कादम्बिनी— [7]तत्रानुजः ।

मानवती— (सविषादं)

अमुमेवान्यथा गण्डं [8]प्राहुः पञ्चविधं परे[9] ।
आकस्मिकमसम्बन्धं सम्बन्धमिव यत्पदम् ॥ ९९ ॥

वाचामन्ते स गण्डः स्याद्भाव्यनिष्टार्थसूचकः ।
प्रतिहारो रहो हर्षः [10]प्रतिभाव्याहतोऽपि च ॥ १०० ॥

---

1. दीसदि. 2. वाक्यैरत्युक्तिः. 3. इत्युक्तक्रमेण । 4. वक्षोऽब्धि. 5. भूषणम्. 6. समागता. 7. तत्रानुजा. 8. प्रायः. 9. पठेत्. 10. प्रतिबोध्याहतो; प्रतिमोध्या.

प्रतिक्रियान्वितो यस्तु प्रतिहारो मतो यथा ।
को मां हन्तुं [1]समर्थः स्यादित्युक्तो रावणेन तु ॥ १०१ ॥

राक्षसो राम इत्याह किं राम इति चोदितः ।
पुनराह यथा रामः कदाचिदुपयास्यति ॥ १०२ ॥

ऊरीकृत्य परं मोहादशिवां[2] [3]तापमाहरत् ।
आत्मानं निर्दिशेद्यस्तु स रहो गण्ड उच्यते ॥ १०३ ॥

यदा दुर्योधनो भीमं हन्तीत्याशयवान् भ्रमात् ।
प्राह दुर्योधनं भीमो हन्तीति कुरुनायकः ॥ १०४ ॥

उत्सवोच्छूनरोमाञ्चः प्रविश्यामोदकृद्वयः ।
भाषते भावि यत्रासौ हर्षगण्डः स्मृतो यथा ॥ १०५ ॥

केनाप्यर्थेन कंसस्येत्युक्तवत्येव यादवे ।
(हस) न्त्यागत्य काप्याह दारको जातवानिति ॥ १०६ ॥

उक्तमन्यार्थमन्येन वचोऽन्यार्थं प्रकल्पयेत् ।
सामान्यपदसामर्थ्यात् स गण्डः प्रतिभा यथा ॥ १०७ ॥

" यो जातोऽन्यत्र योऽन्यत्र वर्धितो मधुसम्भवः ।
परपुष्टः स क्रुद्धोऽयं मारयत्यनिवारितः ॥ "

इत्युत्कण्ठितया प्रोक्तं कंसेनाहितमन्यथा ।
द्व्यर्थो वाक्यस्य विन्यासः शुभाशुभसमन्वितः ॥ १०८ ॥

प्रत्यक्षं प्रोच्यते यत्र गण्डः स व्याहतो मतः ।
यथा देवमुनिस्तत्र दानवं कंसमब्रवीत् ॥ १०९ ॥

सम्भृत्यबलवीर्यस्य प्राप्तोऽसि भवतः क्षयम् ।
[4]रसोक्तस्यान्यथा व्यख्या [5]यत्रावस्यन्दितं यथा ॥ ११० ॥

---

1. प्रभूतः ; 2. दपि वां. 3. ताव. 4. रसस्तस्याः. 5. विचार्या बुद्धिशालिभिः.

सीता— [1]जाद ! कल्लं क्खु तुह्मेहिं अजुज्झाए गन्तव्वं । तहिं सो राआ विणएण णमिदव्वो ।

लवः— अम्ब ! किमावाभ्यां [2]चापजीविभ्यां भवितव्यम् ? ।

सीता— [3]जाद ! सो क्खु तुह्माणं पिदा ।

लवः— किमावयो रघुपतिः पिता ? ।

सीता— (साशङ्कम्) [4]जाद ण क्खु परं तुह्माणं । सअलाए ज्जेव्व पुहवीए ।

बहुप्रपञ्चसंयुक्ता हास्यलेशसमन्विता ।
प्रहेलिकेव गूढार्था नालिकेत्युच्यते यथा ॥ १११ ॥

राजा— (पुरतो निर्वर्ण्य)

" वल्लरी किमुत वामलोचना
दूरतो वसति दृष्टिवर्तिनी ।
वायुना चलति किं नु वर्तिना
मन्मुखी मदनवेदना सहे ॥ "

विदूषकः—वअस्स ! मए विणिव्वसि माम् ।

असम्बद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः ।
विरहोन्मत्तबालादिभाषणेषु मतो यथा ॥ ११२ ॥

" हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन स्तेयं तदभियुज्यते ॥ "

" भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि नभः ।
हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि ॥ "

" आर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुके-
रङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् ।

---

1. (जात कल्यं खलु युवाभ्यामयोध्यायां गन्तव्यं, तर्हि स राजा विनयेन नमितव्यः ।) छाया. 2. राजोपजीविभ्यां. (द-रू) 3. जात स खलु युवयोः पिता । 4. जात न खलु परं युवयोः, सकलाया एव पृथिव्याः । छाया.

एकं त्रीणि नवाष्ट सप्त षडिति प्रध्वस्तसङ्ख्याक्रमा
वाचः [1]क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥"

अन्यार्थ एव व्याहारो हास्यलोभकरो यथा ।

(लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति)

विदूषकः—[2]मा दाव उवएससुद्धा गमिस्ससि । इत्युपक्रमणे ।

गणदासः—(विदूषकं प्रति) आर्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः ।

विदूषकः—[3]पढमं पच्चूसे बम्हणस्स पूआ भोदि । सा तए लंघिदा (मालविका स्मयते)

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवो यथा ॥ ११३ ॥

" कष्टं खलु विप्रकुले जननं कष्टं च भार्यया विरहः ।
धन्याः शूद्रा येषां दारपरिग्रहणमल्पमूल्येन ॥ "

एवं [4]वीथी विधातव्या [5]द्वित्रिपात्रप्रयोजिता ।

आथाङ्कः—

उत्सृष्टकाङ्के प्रख्यातं वृत्तं बुद्ध्या प्रपञ्चयेत् ॥ ११४ ॥

रसस्तु करुणः स्थायी नेतारः प्राकृता नराः ।
भाणवत्सन्धिवृत्त्यङ्गैर्युक्तः स्त्रीपरिदेवितैः ॥ ११५ ॥

वाचायुद्धं विधातव्यं तथा जयपराजयौ ।

अथेहामृगः—

मिश्रमीहामृगे वस्तु चतुरङ्कः त्रिसन्धिमत् ॥ ११६ ॥

नरदिव्यावनियमान्नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्त्यो विपर्यासादयुक्तकृत् ॥ ११७ ॥

---

1. शक्तिधरस्य शैशवकलाः. 2. मातावत् उपदेशशुद्धा गमिष्यसि । 3. प्रथमं प्रत्यूषे ब्राह्मणस्य पूजा भवति सा त्वया लङ्घिता । छाया. 4. देशी. 5. द्व्येकमात्रप्रयोजितः

दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः[1] ।
शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् ॥ ११८ ॥

संरंभं परमानीय युद्धं व्याजान्निवारयेत् ।
वधप्राप्तस्य कुर्वीत वधं [2]नैव महात्मनः ॥ ११९ ॥

कैशिकीवृत्तिरहितो हास्यशृङ्गारवर्जितः ।
अत्र षण्णायकानन्ये वदन्तीहामृगे नरान् ॥ १२० ॥

अथ नाटिका—

लक्ष्यते नाटिकाप्यत्र मिश्रवस्तुसमाश्रया ।
तत्र वस्तु प्रकरणान्नाटकान्नायको नृपः ॥ १२१ ॥

प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।
देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ १२२ ॥

गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसङ्गमः ।
नायिका तादृशी मुग्धा दिव्या वाऽतिमनोहरा ॥ १२३ ॥

अन्तः पुरादिसम्बन्धादासन्ना श्रुतिदर्शनैः ।
अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥ १२४ ॥

नेता तत्र प्रवर्तेत देवीत्रासेन [2]शङ्कितः ।
कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिव नाटिका ॥ १२५ ॥

अथ सट्टकम्—

सट्टकं नाटिकावत्स्यात् किंत्वेतत् प्राकृतैः कृतम् ।
प्रवेशकविहीनं च शृङ्गाराद्भुतभूषितम् ॥ १२६ ॥

चतुर्यवनिकं कार्यं ( वयस्यन्ते प्रकीर्तितम् । ) ?

अथ त्रोटकम्—

दिव्यमानुषसंयोगो यत्राङ्काङ्के विदूषकः ॥ १२७ ॥

---

1. रोऽविगच्छतः. 2. वञ्चित.

त्रोटकं नाम तद् ज्ञेयं गूढनाटकलक्षणम् ।
सप्ताष्टनवपञ्चाकं अन्यन्नाटकवन्मतम् ॥ १२८ ॥

सप्ताङ्कं स्तम्भितरम्भस्त्वष्टाङ्कं मदनरेखा ।
मेनकानहुषाख्यं स्यान्नवाङ्कं परिकीर्तितम् ॥ १२९ ॥

प्रकीर्त्यते परं प्राज्ञैः पञ्चाङ्कं विक्रमोर्वशी ।

अथ प्रेङ्खणम्—

गर्भावमर्शहीनं वा मुखनिर्वहणान्वितम् ॥ १३० ॥

सूत्रधारविहीनं च सर्ववृत्तिसमन्वितम् ।
नियुद्धसंफेटयुतं परिवर्तकभूषितम् ॥ १३१ ॥

मागधीशौरसेनी वा हीननायकचेष्टितम् ।
नेपथ्यनाट्यगीतं च तथा तत्र प्ररोचना ॥ १३२ ॥

अप्रवेशकविष्कम्भमेकाङ्कं प्रेङ्खणं विदुः ।
निदर्शनमिह ज्ञेयं वस्तु वालिवधादिकम् ॥ १३३ ॥

अथ गोष्ठी—

अथ गोष्ठो मतैकाङ्का कैशिकीवृत्तिशालिनी ।
कामशृङ्गारसंयुक्ता पञ्चषड्योषिदन्विता ॥ १३४ ॥

[1]प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।
गर्भावमर्शसन्धिभ्यां [2]शून्या नोदात्तवाक्कृता ॥ १३५ ॥

निदर्शनं रैवतमदनिकाख्यमिहोदितम् ।

अथ भाणिका—

अथ स्याद्भाणिकोदात्तनायिकैकाङ्कभूषिता ॥ १३६ ॥

---

1. प्रकृतैः. 2. हीनोदात्त.

श्लक्ष्णनेपथ्यभाग्बन्दपुरुषा च प्रकीर्तिता ।
कैशिकीभारतीप्राया त्वङ्गैः सप्तभिरुज्ज्वला ॥ १३७ ॥

उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।
समर्पणं चानुवृत्तिः[1] संहारश्चापि सप्तमः ॥ १३८ ॥

प्रसङ्गात्कार्यकथनमुपन्यासः प्रकीर्तितः ।
निर्वेदवाक्यव्युत्पत्तिस्तत्र विन्यास उच्यते ॥ १३९ ॥

विबोधो भ्रान्तिनाशः स्यान्मिथ्याख्यानं तु साध्वसम् ।
समर्पणमुपालम्भवचः स्यत्कोपविद्धया ॥ १४० ॥

अनुवृत्तिर्निदर्शनस्योपन्यासः प्रकीर्तितः ।
समापनं तु कार्यस्य संहार इति कीर्तितः ॥ १४१ ॥

मुखनिर्वहणोपेता कामदत्ता निदर्शनम् ।

अथ संलापकः—

पुरोपरोधसङ्ग्रामविद्रवैः कपटैर्युतः ॥ १४२ ॥

कैशिकीभारतीहीनो भवेत्पाषण्डनायकः ।
हीनोपनायकयुतः श्मशानादिसमाकुलः ॥ १४३ ॥

सप्तविंशतिरङ्गानि भवन्त्यस्य यथोच्यते ।
उत्कण्ठा चावहित्था च प्रयत्नो निधनं तथा ॥ १४४ ॥

आशंसातर्कसंदेहतापोद्वेगाश्च मुग्धता ।
आलस्यं प्रतिपत्तिश्च विलापो वाम्यमेव च ॥ १४५ ॥

साधनानुगमोच्छ्वासविस्मयाश्च चमत्कृतिः ।
विस्मृतिर्लोभसम्फेटौ वैशारद्यं प्रबोधनम् ॥ १४६ ॥

आश्वासश्च प्रहर्षश्च प्रसक्तिरिति कीर्तिताः ।
सलक्षणोदाहरणं व्यक्तत्वान्नात्र दर्शितम् ॥ १४७ ॥

---

1. निवृत्तिश्च. (S. D.)

शेषं नाटकवत्सर्व संलापक उदाहृतः ।
निदर्शनं कनकवतीमाधवमवेक्ष्यताम् ॥ १४८ ॥

अथ प्रस्थानम्—

दासादिनायकं दासीनायिकं द्व्यङ्कमीरितम् ।
कैशिकीवृत्तिबहुळं बहुताळलयान्वितम् ॥ १४९ ॥

सुरापानसमायुक्तं तथा हीनोपनायकम् ।
विलासोद्दिष्टसंक्षिप्तं प्रस्थानमिति कीर्तितम् ॥ १५० ॥

निदर्शनमिह ज्ञेयं शृङ्गारतिलकाह्वयम् ।

अथ काव्यम्—

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ॥ १५१ ॥

गर्भावमर्शसन्धिभ्यां हीनं शृङ्गारभाषितम् ।
खण्डमात्राद्विपदिकाभग्नताळैरलङ्कृतम् ॥ १५२ ॥

उदात्तोक्तिसमायुक्तं बहुताळलयान्वितम् ।
निदर्शनं तु काव्यस्य विज्ञेयो यादवोदयः[1] ॥ १५३ ॥

अथ हल्लीशकम्—

हल्लीशकं तु सप्ताष्टदशस्त्रीजनसङ्कुलम् ।
संप्रयोज्यैकपुरुषं कैशिकीवृत्तिभूषितम् ॥ १५४ ॥

एकाङ्कं स्यादुदात्तोक्तिबहुताळलयात्मकम् ।
निदर्शनं भवेदस्य केळिरैवतकं मतम् ॥ १५५ ॥

अथ रासकम्—

अथ रासकमेकाङ्कं सूत्रधारेण वर्जितम् ।
सुश्लिष्टनान्दीसहितं पञ्चपात्रं द्विसन्धिकम् ॥ १५६ ॥

पूर्णं भाषाविभाषाद्यैर्भारतीकैशिकीयुतम् ।
वीथ्यङ्गमण्डितं मूर्खनायकं ख्यातनायिकम् ॥ १५७ ॥

---

1. माधवोदयः.

उदात्तभावविन्यासंसंश्रितं चोत्तरोत्तरम् ।
गर्भाविमर्शशून्यं च यथा स्यान्मेनकाद्विजम्[1] ॥ १५८ ॥

अथ श्रीगदितम्—

करुणं श्रीसमासीना गायेद्यत्र पठेदपि ।
एकाङ्कं भारतीप्रायं तच्छ्रीगदितमुच्यते ॥ १५९ ॥

गर्भावमर्शरहितं प्रख्यातोदात्तनायकम् ।
प्रसिद्धनायिकं ज्ञेयं यद्वत्क्रीडारसातलम् ॥ १६० ॥

अथ लासिका—

शृङ्गारबहुलैकाङ्का त्रिसन्धिर्न्यूननायिका ।
स्वल्पनृत्ताल्पनेपथ्या पीठमर्देन भूषिता ॥ १६१ ॥

विदूषकविटोपेता दशलास्याङ्गभूषिता ।
लासिका सा समुद्दिष्टा यथा वीणावती मता ॥ १६२ ॥

अथ दुर्मल्ली—

दुर्मल्ली चतुरङ्का स्यात्कैशिकीभारतीयुता ।
विगर्भा नागरनरा न्यूननायकभूषिता ॥ १६३ ॥

त्रिनाडिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।
द्वितीयः पञ्चनाडिः स्यात् विदूषकविलासवान् ॥ १६४ ॥

([2]षण्णाडिस्तु तृतीयः स्यात्पीठमर्दविलासवान्) ।
चतुर्थो दशनाडिः स्यादङ्कः क्रीडितनागरः ।
निदर्शनं भवेदत्र यथा बिन्दुमती मता ॥ १६५ ॥

अथ नाट्यरासकम्—

नाट्यरासकमेकाङ्कं बहुताललयात्मकम् ।
हास्यशृङ्गारसंयुक्तं दशलास्याङ्गभूषितम् ॥ १६६ ॥

---

1. मेनकाहिकम्; 2. मूले नास्ति.

उदात्तनायकं चैव पीठमर्दोपनायकम् ।
द्वितीयसन्धिशून्यं स्याद्रासस्याऽत्र नायिका ॥ १६७ ॥

निदर्शनं दर्शनीयं स्याद्विलासवती यथा ।

अथ उल्लाप्यम्—

उल्लाप्यं दिव्यचरितं मुखनिर्वहणान्वितम् ॥ १३८ ॥

शृङ्गारहास्यकरुणयुतमेकाङ्कभूषितम् ।
बहुपुस्तं गीतमयं चतुरोज्ज्वलनायकम् ॥ १६९ ॥

..............................

.............................. ।

नाट्यप्रबन्धनिकुरुम्बमिदं विभाति
दानं त्वदीयमिव मन्मथरातलेन्द्र ॥ १७० ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे रूपकनिरूपणं नाम
नवमः परिच्छेदः

— —

1. (......परिहार...)

## दशमः परिच्छेदः

अथ नाट्यालङ्काराः—सिद्धिः प्राप्तिर्विचारश्चानुनयस्तदनन्तरम् ।

उद्दिष्टमपि दाक्षिण्यं प्रसिद्धिर्गर्हणं यथा ॥ १ ॥

पश्चात्तापस्पृहाक्षोभाऽऽक्रन्दाः[1] परिहृतिस्तथा ।

नीतिरुत्तेजनं शोभाऽभिमानः संशयस्तथा ॥ २ ॥

तुल्यतर्कोऽक्षमा चैवाध्यवसायो विमर्शनम् ।

युक्तिः प्रोत्सहनं चैव साहाय्यं च निवेदनम् ॥ ३ ॥

अभिज्ञानं च पृच्छा चातिशयो गुणकीर्तनम् ।

इति त्रिंशदलङ्काराः प्रायो नाट्येषु सङ्गताः ॥ ४ ॥

सिद्धिरिष्टार्थसंसिद्धिरनेकेषामुदाहृतिः ।

यथा—

" हे भूतधात्रि यदि तावदहं विशुद्धा

तन्मे वरौ....व देवि वृणे वरं च ।

हे विष्णु वासव महेश्वर चन्द्रसूर्यौ

जन्मान्तरेषु भविता प्रभुरेष रामः ॥ "

प्राप्तिः सा समुदायस्य ज्ञानं यच्चैकदेशतः ॥ ५ ॥

यथा—

" हंस प्रयच्छ मे कान्तां गतिस्तस्या हृतास्त्वया ।

सम्भावितैकदेशेन स्तेयं यदभियुज्यते ॥ "

विचारः स हि विज्ञेयः संशये निर्णयस्तु यः ।

" असंशयं क्षत्रपरिग्रहक्षमा

यदार्यमस्यामभिलाषि मे मनः ।

सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तः करणप्रवृत्तयः ॥ ”

वचसा कर्मणा प्रीतिर्यस्मिन्ननुनयो हि सः ॥ ६ ॥

यथा—

“ परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्ररशना चोर्वी सखी च यूवयोरियम् ॥ ”

उद्दिष्टं स्यात्परोक्षे च प्रत्यक्षे चार्थकीर्तनम् ।

यथा—

“ तस्मिन् जीवति दुर्धर्षे हतमप्य (हतं [1]बलम्) ।
(हनूमत्युज्झित) प्राणे जीवन्तोऽपि मृता वयम् ॥ ”

प्रत्यक्षे यथा—

“ हा धिक् ,प्रियतमा सेयं दुःसंस्थानमलीमसा ।
सवैकप्रत्यभिज्ञेया मूर्ते भवति तद्यथा ॥ ”

(दाक्षिण्यं) श्लक्ष्णया वाचा परचित्तानुवर्तनम् ॥ ७ ॥

यथा—

“ प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण ।
आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा ॥ ”

प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।

यथा—

“ सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामूर्वश्या च भुवा च यः ॥ ”

य........................द्भेदेन कृत्सनम् ॥ ८ ॥

यथा—

"अन्यासक्तमवध्यं च निघ्नन् क्षात्रपराङ्मुखः ।
न कथं लक्ष्मणो धन्वी लज्जते हृदयादपि ॥"

पश्चात्तापोऽनुतापस्तु कृत्वा................।
................निघ्नन् भ्रातृयुद्धाभियोगिनम् ।
अहं सूर्यकुलस्याद्य कलङ्कं किं कृतं मया ॥"

स्पृहा यस्त्वभिलाषः स्याद्वस्तुनो रामणीयकम् ॥ ९ ॥

यथा—

"जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
भ्रातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥"

अविक्षेपवचोयुक्तः कोपजः क्षोभ उच्यते ।

यथा—

"त्वया तपस्वि चण्डाल ! प्रच्छन्नवधवर्तिनः ।
न केवलं हतो वाली स्वात्मा च परलोकतः ॥"

शोकप्रलाप आक्रन्दो नाट्यविद्भिरुदीरितः ॥ १० ॥

यथा—

"हा विधे नष्टपक्षेण मय्येव परिवर्तसे ।
हन्तस्तातो हृता पत्नी भ्राता............॥"

परिहारः स विज्ञेयः कृतानुचितमार्जनम्[1] ।

यथा—

"प्राणप्रयाणदुःखार्त उक्तवानस्म्यन[2]क्षरम् ।
तत् क्षमस्व विभो ! किञ्च सुग्रीवस्ते समर्पितः ॥"

---

1. मार्जितम्. 2. उक्तवानस्त्यनक्षरम् ।

न्यायानुवृत्तिरेकत्र नीतिरित्युच्यते यथा ॥ ११ ॥

" स्नेहं प्रति न पुत्रेषु विशेषः कश्चिदस्ति मे ।
किं तु न्यायं पुरस्कृत्य मया ज्येष्ठोऽभिषिच्यते ॥"

उत्तेजनं तु कार्यार्थं यत्नानक्षरमुच्यते ।

यथा—

" इन्द्रजिच्चण्डवीर्येऽसि नाम्नैव बलवानसि ।
धिक्[3] धिक् प्रच्छन्नरूपेण युध्यसेऽसद्भयाकुलः ॥"

सिद्धैः परं समं श्लिष्टं साध्यं शोभाऽभिधीयते ॥ १२ ॥

यथा—

" सद्वंश सम्भुवः शुद्धः [4]कुटिलोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥"

अभिमानोऽपरित्यागः पक्वदुःखसुखस्य च ।

यथा—

" खरेन्द्रजिद्दूषणकुम्भकर्णा
गताः किमेतेन गता गतास्ते ।
अहं च गच्छामि यदि प्रणाशं
तथाऽपि [5]सीतां न च मर्षयामि ॥"

अनिश्चयेन वाक्येन समाप्तिः संशयो यथा ॥ १३ ॥

" इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
अथ वा[6] विपिनस्यैव देवता किमु पार्वती ॥"

---

1. तं प्रच्छन्नः स्वरूपेण युध्यतेऽस्माद्भयाकुलः 2. कोटिदोऽपि. 3. पीडां. 4. किं चास्य विषयस्यैव.

स्यादुत्प्रेक्षादिसम्पन्नस्तुल्यतर्कस्तु तद्यथा ।

" तरङ्गभ्रूलताफेनं दुकूलमिव बिभ्रती ।
मन्ये परिणता सेयं सरिद्भावेन भामिनी ॥ "

अक्षमा त्वहितानां या परिभूतिर्न सह्यते ॥ १४ ॥

" सीताहरणदुर्वृत्तपरिपाकफलोन्मुखः ।
स्वकुलस्यान्तकः स त्वमाशराग्रे[1] भवामि ते ॥ "

कार्येष्वध्यवसायो यस्तुलनागर्भितं वचः ।

" कियन्मात्रमकूपारः कियन्मात्रं च सा पुरी ।
कियन्मात्रं दशास्योऽपि क्रूरस्य मम धन्विनः ॥ "

विमर्शो दुःखदीनानामनिष्टफलनिश्चयः ॥ १५ ॥

" विद्वानपावृत्तमिव[2] स्वभाग्यं
न तावदात्मानमहं ब्रवीमि ।
महामुनेर्विश्रवसस्तपोभि[3]-
र्निवापबीजं [4]यदि नः [5]कुलं स्यात् ॥ "

अवधारणमर्थस्य केनचिद्युक्तिरिष्यते ।

" यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वे ॥ "

प्रोत्साहनं तदुत्साहगिरा कस्यापि योजनम् ॥ १६ ॥

---

1. शरासे. 2. विद्वानहि...मिव स्वयं च. 3. कुलेऽस्मिन्. 4. तपसैः इह नस्यात्. 5. कुले.

यथा—

“ कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं यातु मोदं ताडय ताटकाम् ॥ ”

साहाय्यमानुकूल्येन कार्ये कस्यापि योजनम् ।

यथा—

“ रन्ध्राणि तु सजातीयो दुर्लक्ष्याण्यपि पश्यति ।
इन्द्रजिन्निधनं नाथ लक्ष्मणानुचरे मयि ॥ ”

भूतस्य कथनं भाविसूचनाय निवेदनम् ॥ १७ ॥

यथा—

“ वानरः क्षत्रियः कोऽपि शत्रुः क्षुद्रो न गण्यताम् ।
वालिनं कार्तवीर्यं च स कथं विस्मृतो भवान् ॥ ”

अभिज्ञानं यदुद्भेदः पूर्वदृष्टस्य केनचित् ।

“ आकृतेः किञ्चिदुल्लेखो विभावयति लक्षणम् ।
महतोपप्लवेनेव पीडितं चन्द्रमण्डलम् ॥ ”

पृच्छान्वेषणमर्थस्य स्यादर्थाभ्यर्थनापरम् ॥ १८ ॥

यथा—

“ भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-
रिहस्थैर्दृष्टा वा विदितमथवा स्याः किमु भवेत् ।
वयोऽवस्थां तस्याः शृणुत सुभगो यत्र मदनः
प्रगल्भव्यापारश्चरति हृदि मूर्खश्च वपुषि ॥ ”

गुणमेकस्य सङ्कीर्त्य तस्यातिशयवर्णनम् ।
क्रियते यत्र वाक्यार्थः स स्यादतिशयो यथा ॥ १९ ॥

" विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्धुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ "

इष्टसिद्धौ गुणानां तु कीर्तनं गुणकीर्तनम् ।

" शिरोऽर्चितशिवः शौर्यवशीकृतजगत्त्रयः ।
सुरस्त्रीदुर्लभः सोऽहं मनस्वी च दशाननः ॥ "

नानाविधैरलङ्कारैर्नाट्यविद्याविभूषिताः ।
मोदाय भवतो भूयान्मनसो मन्मभूपते ॥ २० ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे नाट्यालङ्कारनिरूपणं नाम
दशमः परिच्छेदः

## एकादशः परिच्छेदः

अथ चाटुप्रबन्धानां लक्षणं कथ्यतेऽधुना ।
मुक्तकं पद्यमेकं स्याद्द्विकं पद्यद्वयं मतम् ॥
त्रिकं त्रयेण पद्यानां पञ्चरत्नानि पञ्चकम् ।
अष्टकं गजमाला स्यान्नवकं रत्नमालिका ॥
[1]नामावळी द्वादशं स्याच्छोडशेन्दुकला मता ।
सप्तविंशति पद्यानि नाम्ना तारावळी मता ॥
त्रिंशता त्रिंशिका पञ्चाशता पञ्चाशिकेष्यते ।
शतेन शतकं प्रोक्तमष्टोत्तरशतं परम् ॥
वृत्तैरभिन्नैर्वा कार्यमेकं यथा(रुचि) ।
काव्यमप्येकसर्गादि द्वात्रिंशदवधिस्मृतम् ॥
अथोदाहरणायास्तु लक्षणं कथ्यतेऽधुना ।
कल्पनीयानि पद्यानि सप्त सप्तविभक्तिभिः ॥
सम्बोधनात्मिका चान्ते विभक्तेष्वष्टमो भवेत् ।
शक्करीप्रभृतीनि स्युश्छन्दांस्यस्य यथारुचि ॥
रीतिः प्रधाना गौडीया गतिः स्याद्द्रुतमध्यमा ।
ओजः प्रसदशब्दाः स्युः सानुप्रासाः क्वचित्क्वचित् ॥
विभक्तिपुरसा................रौमं क्रमेण वा । ?
तत्राद्यं मालिनीवृत्तं जयेत्यादिसमन्वितम् ।
गद्यात्मकद्ळान्यष्टौ प्रत्येकं सयतीनि च ॥
ततः सत्कलिका कार्या समस्ताब्धिपदात्मिका । ?
अन्ते [2]तूत्कलिका युक्ता यत्यनुप्राससशोभिनी ॥

---

1. द्वादशे.........न्दुकला मता । 2. पद्यसमा.

[1](चतुर्थोत्कलिका)स्याद्वा विभक्त्याभासलाञ्छिता ।
कलिकोत्कलिकान्यष्ट नव्यताळलयान्विताः ॥
प्रतिपद्यं भवेन्नेतृनाम तत्तद्विभक्तिमत् ।
[2]वीरावळी कीर्तिमती सुभगा भोगमालिनी ॥
कळावती कान्तिमती कमला जयवत्यपि ।
एता विभक्त्यधिष्ठात्र्यो देवताः कथिता बुधैः ॥
ददत्येताः स्तुतिप्रीताः स्वस्वनामसमं फलम् ।
[3](पद्यमे)कं च कर्तव्यमन्ते सर्वविभक्तिकम् ॥
(आर्यामनूद्यतर)कुर्यात् कवि श्रुत्याख्यया ततः ।
अप्राकृता प्राकृता वा प्राकृतोन्मिश्रितापि वा ॥
देशीभिश्च पदैर्युक्ता[4](मिश्रितैः पद) सञ्चयैः ।
वशवीर्यश्रुताद्यैश्च युक्तोदाहरणा मता ॥
अमुष्य नायकाः प्रोक्ता देवा दैत्या महीसुराः ।
गुरुरक्षणया सार्थं सचिवाः सैनिकाधिपाः ॥
विभक्ति ([5]सप्तसंयुक्ताया सम्बुध्या) विनाकृता ।
[6]अद्धवीति समाख्याता सद्भिश्चाट्ठु विशारदैः ॥
केवलं कलिकासञ्ज्ञात्कल्याणीति निगद्यते ।
केवलोत्कलिकासञ्ज्ञादुत्फुल्लक्वती भवेत् ॥
यस्या उत्कलिकास्थाने केवलार्या प्रयुज्यते ।
फलोदाहरणं तत्स्यादार्यासञ्ज्ञान्न भिद्यते ॥
केवला प्रथमा वाणी द्वितीया केवला झटा ।
तृतीया केवला[7](कीर्ति)चेतुर्थी देवलाभिनी ॥
पञ्चमी केवला(पाणी) षष्ठी (मोटी)ति कथ्यते ।
सप्तमी(घोटिका) प्रोक्ता सम्बुद्धिः सरसावळी ॥

1. चतर्युत्कलिका' 2. वीरवती. 3. (...) 4. (...) 5. (... युवाता ...) 6. B. संस्तवी. 7. (की...).

भिन्ने वर्णे भवेन्नाम सञ्जाते च तथा भवेत् ।
सर्वासां पद्यमन्ते च कविनायकलाञ्छितम् ॥

एषैव गद्यरहिता नवमाणिक्यमालिका ।
एषैव च त्रिगुणिता भवेन्नक्षत्रमालिका ॥

रसः शृङ्गार एव स्याद्भोगवत्यां (प्रधानतः) ।
अनुषङ्गेन मिलितो वीरोऽपि स्यात्कचित्कचित् ॥

वर्णनीयाः क्रमात्साङ्गा वीरभोगादयो गुणाः ।
आशीः पद्यसमायुक्ता प्रथमे विरतावपि ॥

अष्टभिर्वा षोडशभिः........वभिर्युता ।
दलानि षड्वा चत्वारि प्रत्येकं सयतीनि च ॥

मध्ये भवेयुरथवा यमिताद्यक्षरैः कचित् ।
गतेरपि प्रयोगः स्याद्यथारीति समृद्धितः ॥

तत्तदर्थावसा........भिः स्यात्पदे पदे ।
देव त्वं जय वीर त्वं धीर जीवादिकं पदम् ॥

तत्तत्स्थाने प्राकृतादिभाषाभिर्बिरुदाश्रितैः ।
भोगोपजृम्भितैर्गद्यपद्यैः सेयं सपल्लवैः ॥

भोगादेशर्तुभावाङ्क........ज्ञानचातुरी ।
वर्णयेद्वीरलब्धांश्च तांस्तान् श्लाघ्यादिकान् गुणान् ॥

चतुर्भिर्लघुभिः पद्यप्रान्ते सम्मदकारिणी ।
मङ्गलानि दलानि स्युः प्रथम........पि ॥

वृत्तेनैकेन नेतारं वर्धयेदाशिषाऽन्तिमे ।
ग्रन्थसंख्या शतं षष्ठि रत्न रव्यातोत्तमा बुधैः ॥

भोगावली परं युक्ता देवानां भूभुजामपि ।
............द्यात्मायशो विबुधावली ॥

द्वाभ्यां वापि चतुर्भिर्वा पञ्चभिष्षड्भिरेव वा ।
भाषाभिर्विहिताभिः स्याद्यदि वा देशभाषितैः ॥

कुलक्रमागतैर्वापि स्वापदानपदैरपि ।
............सार्थैः स्यात्तत्तदर्थाविनाकृतैः ॥

नानापुरातनक्ष्माभृद्भिरुदारोहणैरपि ।
वाहनारोहशस्त्रास्त्रप्रयोगैर्भोगवर्णनैः ॥

गुणिनां वर्णनैश्चापि विनयक्रमशालिनाम् ।
गौडरीत्या विधातव्या सानुप्रासा सपल्लवा ॥

आद्यन्तयोः स्यादार्या वा गाथा वा मङ्गलात्मिका ।
इति श्रीलक्षणानि स्यु र्लक्षणानीतराणि वा ॥

सद्गुणारोपणं यत्र नेतुः सैव गुणावळी ।
गुणा परोपकारार्था वर्ण्याः सर्वे प्रधानतः ॥

दळानि वाष्टौ चत्वारि सानुप्रासयतीनि च ।
मात्राभिरथवा वर्णैः समानि स्युः पर........ ॥

तादृग्वर्णानि सर्वाणि संस्कृतेन कचित्कचित् ।
अस्याः शृङ्गारवीरौ च कचित्तत्राद्भुतो रसः ॥

दरपङ्क्ति विरामेषु देवेत्यादिपदं न्यसेत् ।
आदौ........पद्यमन्ते स्याद्वृत्तगन्धि च ॥

गद्यान्यतममाद्यान्मध्ये हि पदमेव वा ।
पुरे जनपदे रम्ये........द्यां यो गुणसम्पदः ॥

नेतारं वर्णयेत्ताभि रेषैव स्याद्गुणावळी ।
........भवेत् षड्भि र्भाषाभिर्विकसत्क्रमम् ॥

एकैकभाषयैकैकं पद्यं सर्वविभक्तिभिः ।
रगळापि तथापि स्यात्तत्र तत्र सपल्लवा ॥

श्लोकावाद्यन्तयोर्नेतृमङ्गलार्थौ न्यसेद्बुधः ।
त्रिवा....वृत्तं चेद्भाषाभिर्मण्डलीक्रमात् ॥
उत्तमं चक्रवालं स्यादन्यूनादधिकं मतम् ।
रसादीन्वर्णयेद्भूतीर्गुणकर्मानुसारतः ॥
उक्तमेतद्विशेषेण.........विजिगीषुभिः ।
द्वात्रिंशद्गद्यसंयुक्तं गद्याग्रे पल्लवैर्युतम् ॥
चतुर्धा भिन्नरूपेण न्यस्तस्वं स्वरबन्धनम् ।
तालैर्द्वादशभिर्युक्तं लोकोत्तरमुदाहृतम् ॥
........परं....स........तः ।
......................................
......................................
न्त्यागसमा गुणा यस्यामूह्यन्ते कविभिः कृतौ ॥
........गद्यमेकं चतुर्भिः पल्लवैर्युतम् ।
चतुर्धैव समावृत्तं चुतुराक्षरबन्धनम् ॥
आशीराद्यन्त....नेतुः पद्यद्वयेन तु ।
एवं पद्यैश्च गद्यैश्च सा भवेत्त्यागघोषणम् ॥
अथ संख्या भवेत् षष्ठिः शतं वा स्याद्विशेषतः ।
अस्यास्तु सर्वे नेतारो भवेयुस्त्यागिनो (नराः) ॥
पद्यं गद्यं च तालं च सानुतालं चतुर्विधम् ।
देव वीर जयेत्यादिसम्बुद्धिः शान्त एव च ॥
स्याच्चतुर्धा च वृत्तं स्याच्चतुर्भद्रमितीरितम् ।
चाटुप्रबन्धैस्त्वयि चारुकीर्तिरुदारवर्णैरुपलास्यमाना ।
रक्ता सती राजगुरो विचित्रं मन्मक्ष्मानाथ मरालशुभ्र ॥

इत्यमृतानन्दयोगीन्द्रविरचितेऽलङ्कारसङ्ग्रहे चाटुप्रबन्धलक्षणं
नामैकादशः परिच्छेदः

# अलङ्कारसङ्ग्रहे उदाहृतश्लोकानां सूची

## शुद्धाशुद्धसूची

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १५ | सात्विका | सात्त्विका |
| ११ | १४ | सितसक्तिः | चित्तासक्तिः |
| ,, | ,, | यथ्रा | यथा |
| १६ | ७ | प्रपि | प्रति |
| १६ | १५ | तिष्ट | तिष्ठ |
| २० | १२ | सम | समं |
| २२ | ५ | गोपायते | गोपाय्यते |
| ,, | २० | स्थर्य | स्थैर्य |
| २३ | १६ | कन्यानूढा | कन्याऽनूढा |
| २४ | २० | स्यात्ति | स्यात्ति् |
| २६ | २१ | अर्पयतीः | अर्पयती |
| ३० | ५ | स; द्योतका | सा; द्योतिका |
| ३२ | ५ | व्रोडाध | व्रीडार्ध |
| ३३ | १० | जृम्भितैः | जृम्भितैः |
| ४१ | १९ | स्सुबोधं | सुबोधं |
| ४३ | ६ | विलासिं | विलास |
| ४४ | १० | सङ्क्रौन्तैः | सङ्क्रान्तैः |
| ४५ | ७ | गुणः स्साम्य | गुणः साम्य |
| ,, | १४ | विज्ञेयः स्सोऽपि | विज्ञेयः सोऽपि |
| ४५ | १६ | मस्माक | मस्माकं |
| ४६ | १ | दायता तदीय | दयिता त्वदीय |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४९ | ५ | सादश्य | सादृश्य |
| ५४ | ४ | हरदेष | हरेदेष |
| ५५ | ९ | रुद्रमात् | रुद्धमात् |
| ,, | १२ | स्रस्तं | स्रस्तां |
| ५७ | १९ | टादीनां | ठादीनां |
| ५८ | १० | ऽत्र | |
| ५९ | १२ | तनया | तनयां |
| ६६ | १५ | परीभव | परिभव |
| ७२ | १६ | देकदानरवधः | देकदा नरवधः |
| ७३ | १० | यदि मास्तु | यदिमास्तु |
| ,, | १२ | प्रत्यक्ष | प्रसिद्ध |
| ८० | २२ | समन्विताम् | समन्वितम् |
| ८३ | २२ | त्वमग्रता | त्वमग्रतो |
| ,, | २३ | सिद्ध्यर्थे | सिद्ध्यर्थं |
| ८५ | | षष्टः परि | सप्तम· परि |
| ८७ | | ,, | ,, |
| ,, | ३ | मित्यच्च्यते | मित्युच्यते |
| ९० | १ | प्रसाद | प्रसादं |
| ,, | ९ | धानं | दानं |
| ,, | १९ | भ अंगेण | भु अंगेण |
| ९३ | १९ | कायस्य | कार्यस्य |
| ,, | ,, | धानं | दानं |
| ,, | २० | (स्वागतम्) | (स्वगतम्) |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९३ | २१ | याधा | यादा |
| ९४ | १ | एकार्थ | ऐकार्थ्य |
| ,, | २ | विरोध | विबोध |
| ,, | ६ | करव | कैरवः |
| ,, | ९ | विरोध | विबोध |
| ९६ | १४ | दुरूपदेश | दुरुपदेश |
| ९७ | ,, | राग | रागः |
| १०२ | १ | घिस्मर | घस्मर |
| ११५ | ९ | मुत | भूत |
| ,, | १५ | दाहश्च | दाहश्च |
| ११६ | ९ | त्राता | त्रता |
| ११७ | १५ | छन्न | छन्नः |
| ,, | २२ | व्याखया | व्याख्या |
| १२० | ९ | कुड्यः | कुड्चः |
| १२६ | १ | नाटकवत्सन्न | नाटकवत्सर्व |
| १२८ | २ | वाससाज्जा | वाससज्जा |
| १२९ | ७ | कीर्ततम् | कीर्तनम् |
| १३२ | १० | सम्भुवः | सम्भवः |
| १३६ | १६ | प्रसदञ्झन्दा | प्रसादशब्दाः |
| १३७ | १२ | वश | वंश |
| १३९ | १२ | प्रथान | प्रवान |